# चम्पूरामायणे

# बालकाण्डम्

३४ –०३.०९.२०१८

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology



# मङ्गलम्

- लक्ष्मीं तनोतु नितरामितरानपेक्षम्
- अङ्घ्रिद्वयं निगम-शाखि-शिखा-प्रवालम् ।
- हैरम्बमम्बुरुह-डम्बर-चौर्य-निघ्नम्
- विघ्नाद्रि-भेद-शतधार-धुरन्धरं नः ॥

# पुनरावर्तनम्

- गङ्गावतरणम्
- विशालानगरी – दितेः सप्तमरुतां च कथा, विशालायाः परिचयः
- विशालामतीत्य मिथिलामार्गे गौतमाश्रमे अहल्यावृत्तान्तस्य आरम्भः

# अत्रागमद्गौतमधर्मदारानार्यजुष्टेन पथा महेन्द्रः।
# स च क्रुधा निर्वृषणं वृषाणं भार्यामदृश्यां च मुनिश्चकार॥९०॥

- अत्र, अगमत्, गौतम-धर्म-दारान्, अनार्य-जुष्टेन, पथा, महेन्द्रः, सः, च, क्रुधा, निर्वृषणम्, वृषाणम्, भार्याम्, अदृश्याम्, च, मुनिः, चकार
- अत्र = अस्मिन् आश्रमे
- अगमत् = सङ्गतवान्
- कः अगमत्? महेन्द्रः = देवराजः इन्द्रः
- काम् अगमत्? गौतमधर्मदारान् = गौतमस्य धर्मपत्नीम् अहल्याम्

vyoma
॥वाचं धेनुमुपासीत॥
Samskritam - Value Education - Technology

# अत्रागमद्गौतमधर्मदारानानार्यजुष्टेन पथा महेन्द्रः।
# स च क्रुधा निर्वृषणं वृषाणं भार्यामदृश्यां च मुनिश्चकार॥९०॥

- केन अगमत्? पथा = मार्गेण
- कीदृशेन पथा? अनार्यजुष्टेन = असाधुजनाचरितेन, वञ्चनया
- चकार = विहितवान्
- कः चकार? सः मुनिः = गौतममहर्षिः

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

# अत्रागमद्गौतमधर्मदाराननार्यजुष्टेन पथा महेन्द्रः।
# स च क्रुधा निर्वृषणं वृषाणं भार्यामदृश्यां च मुनिश्चकार॥९०॥

- किं चकार? निर्वृषणम् = विगताण्डकोशम्
- कं निर्वृषणं चकार? वृषाणम् = इन्द्रम्
- पुनः किं चकार? अदृश्याम् = द्रष्टुम् अशक्याम् / पूर्वरूपपरित्यागेन पाषाणरूपाम्
- काम् अदृश्यां चकार? भार्याम् = पत्नीम्
- केन कारणेन चकार? क्रुधा = कोपेन

Vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

# अत्रागमद्गौतमधर्मदाराननार्यजुष्टेन पथा महेन्द्रः।
# स च क्रुधा निर्वृषणं वृषाणं भार्यामदृश्यां च मुनिश्चकार॥९०॥

- अन्वयः – अत्र महेन्द्रः अनार्यजुष्टेन पथा गौतमधर्मदारान् अगमत् । सः मुनिः च क्रुधा वृषाणं निर्वृषणम्, भार्याम् अदृश्यां च चकार ।
- तात्पर्य्यम् – अस्मिन्नाश्रमे हि देवेन्द्रः असाधुमार्गेण गौतमस्य धर्मपत्नीम् अहल्यां सङ्गतवान् । गौतमः क्रोधेन इन्द्रं विगताण्डकोशाम्, पत्नीम् अदृश्यां च विहितवान् ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education ...

# अत्रागमद्गौतमधर्मदाराननार्यजुष्टेन पथा महेन्द्रः। स च क्रुधा निर्वृषणं वृषाणं भार्यामदृश्यां च मुनिश्चकार॥१०॥

- तस्यान्तरं विदित्वा तु सहस्राक्षश्शचीपतिः । मुनिवेषधरोऽहल्यामिदं वचनमब्रवीत् ॥
- मुनिवेषं सहस्राक्षं विज्ञाय रघुनन्दन । मतिं चकार दुर्मेधा देवराजकुतूहलात् ॥
- अथ दृष्ट्वा सहस्राक्षं मुनिवेषधरं मुनिः । दुर्वृत्तं वृत्तसम्पन्नो रोषाद्वचनमब्रवीत् ॥
- मम रूपं समास्थाय कृतवानसि दुर्मते । अकर्तव्यमिदं तस्माद्विफलस्त्वं भविष्यसि ॥
- तथा शप्त्वा स वै शक्रमहल्यामपि शप्तवान् । इह वर्षसहस्राणि बहूनि त्वं निवत्स्यसि ॥
- वायुभक्षा निराहारा तप्यन्ती भस्मशायिनी । अदृश्या सर्वभूतानां आश्रमेऽस्मिन्निवत्स्यसि ॥

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam - Value Education - Technology

# अत्रागमद्गौतमधर्मदारानन्नार्यजुष्टेन पथा महेन्द्रः।
# स च क्रुधा निर्वृषणं वृषाणं भार्यामदृश्यां च मुनिश्चकार॥९०॥

- अगमत् – "गमॢ गतौ" – लुङ् प्रथम.१
- गौतमधर्मदारान् – धर्मार्थं दाराः, गौतमस्य धर्मदाराः । "भार्या जायाथ पुंभूम्नि दाराः" (अमरः)
- अनार्यजुष्टेन – अनार्यैः जुष्टम्, तेन
- पथा – नकारान्तः, पुं, ३.१ । "अयनं वर्त्म-मार्ग-अध्व-पन्थानः पदवी सृतिः" (अमरः)

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam -Value Education -Technology

# अत्रागमद्गौतमधर्मदाराननार्यजुष्टेन पथा महेन्द्रः।
# स च क्रुधा निर्वृषणं वृषाणं भार्यामदृश्यां च मुनिश्चकार॥१०॥

- क्रुधा – धकारान्तः, स्त्री, ३.१ । "कोप-क्रोध-अमर्ष-रोष-प्रतिघाः रुट्-क्रुधौ स्त्रियौ" (अमरः)
- निर्वृषणम् – निर्गतौ वृषणौ यस्मात् सः, तम्
- वृषाणम् – नकारान्तः, पुं, २.१ । " वासवो वृत्रहा वृषा" (अमरः)
- अदृश्याम् – न दृश्या, ताम् ।
- वृत्तम् – उपजातिः (१,४ – इन्द्रवज्रा, २,३ उपेन्द्रवज्रा)

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

वनमेतद्गते रामे शापान्मुक्ता भविष्यसि।
इत्युक्त्वा गौतमः पत्नीं हिमाद्रिं तपसे ययौ॥९१॥

- वनम्, एतत्, गते, रामे, शापात्, मुक्ता, भविष्यसि, इति, उक्त्वा, गौतमः, पत्नीम्, हिम-अद्रिम्, तपसे, ययौ
- भविष्यसि
- कीदृशी भविष्यसि? मुक्ता
- कस्मात् मुक्ता? शापात् = अदृश्यत्वरूपात्

Vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

# वनमेतद्गते रामे शापान्मुक्ता भविष्यसि।
# इत्युक्त्वा गौतमः पत्नीं हिमाद्रिं तपसे ययौ॥९१॥

- कदा मुक्ता भविष्यसि? गते = प्राप्ते
- कस्मिन् गते? रामे = दाशरथौ
- कुत्र गते? एतत् वनम् = इदं काननम्
- इति उक्त्वा = एवम् अभिधाय
- काम् उक्त्वा? पत्नीम् = भार्याम्

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

वनमेतद्गते रामे शापान्मुक्ता भविष्यसि।
इत्युक्त्वा गौतमः पत्नीं हिमाद्रिं तपसे ययौ॥९१॥

- ययौ = जगाम
- कः ययौ? गौतमः
- कुत्र ययौ? हिमाद्रिम् = हिमालयपर्वतम्
- किमर्थं ययौ? तपसे = तपश्चरितुम्

vyoma
॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

वनमेतद्गते रामे शापान्मुक्ता भविष्यसि।
इत्युक्त्वा गौतमः पत्नीं हिमाद्रिं तपसे ययौ॥९१॥

- अन्वयः – “रामे एतद्वनं गते शापात् मुक्ता भविष्यसि” इति पत्नीम् उक्त्वा गौतमः तपसे हिमाद्रिं ययौ ।
- तात्पर्य्यम् – “यदा श्रीरामः इदं काननं प्रति आगमिष्यति, तदा त्वम् अदृश्यत्वरूपात् शापात् मुक्ता स्वरूपं प्राप्स्यसि” इति पत्नीम् आश्वस्य गौतममहर्षिः तपश्चरितुं हिमालयपर्वतं जगाम ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

वनमेतद्गते रामे शापान्मुक्ता भविष्यसि।
इत्युक्त्वा गौतमः पत्नीं हिमाद्रिं तपसे ययौ॥९१॥

- वनमेतद्गते रामे – सतिसप्तमी प्रयोगः
- मुक्ता – "मुच्लृ मोक्षणे" + क्त + टाप्
- हिमाद्रिम् – हिमस्य अद्रिः, तम्
- तपसे – सकारान्तः, नपुं, ४.१
- ययौ – "या प्रापणे", लिट्, प्रथम.१

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# इत्थं विदितवृत्तान्ते देवतानां गणे तदा।
# पितृणां प्राभवाल्लेभे मेषस्य वृषणं वृषा॥९२॥

- इत्थम्, विदित-वृत्तान्ते, देवतानाम्, गणे, तदा, पितृणाम्, प्राभवात्, लेभे, मेषस्य, वृषणम्, वृषा
- लेभे = प्राप्तवान्
- कः लेभे? वृषा = इन्द्रः
- कं लेभे ? वृषणम् = अण्डकोशम्
- कस्य वृषणम्? मेषस्य = एडकस्य

Vyoma
॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

# इत्थं विदितवृत्तान्ते देवतानां गणे तदा।
# पितॄणां प्राभवाल्लेभे मेषस्य वृषणं वृषा॥९२॥

- कस्मात् कारणात् लेभे? प्राभवात् = माहात्म्यात्
- केषां प्रभवात्? पितृणाम् = पितृदेवतानाम्
- कदा लेभे? तदा = तस्मिन् समये
- कस्मिन् समये? इत्थं विदिवृत्तान्ते = एवं प्रवृत्तं वृत्तान्तं ज्ञातवते
- कस्मिन् विदितवृत्तान्ते सति? गणे = समूहे
- केषां गणे? देवतानाम् = अमराणाम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# इत्थं विदितवृत्तान्ते देवतानां गणे तदा।
# पितॄणां प्राभवाल्लेभे मेषस्य वृषणं वृषा॥९२॥

- अन्वयः – तदा देवतानां गणे इत्थं विदितवृत्तान्ते पितॄणां प्राभवात् वृषा मेषस्य वृषणं लेभे ।
- तात्पर्य्यम् – लज्जया प्रत्यागते इन्द्रे अमराः प्रवृत्तं वृत्तान्तं ज्ञातवन्तः । ततः पितृदेवतानां माहात्म्येन निर्वृषणः इन्द्रः एडकस्य अण्डकोशं प्राप्तवान् ।

इत्थं विदितवृत्तान्ते देवतानां गणे तदा।
पितॄणां प्राभवाल्लेभे मेषस्य वृषणं वृषा॥९२॥

- प्राभवात् – प्रभोः भावः – प्रभु + अण्
- प्राभवाल्लेभे – प्राभवात् + लेभे – परसवर्णसन्धिः (तोर्लि)
- मेषस्य – "मेढ्र-उरभ्र-उरण-ऊर्णायु-मेष-वृष्णयः एडके" (अमरः)
- वृषा – नकारान्तः, पुं, प्रथमा.१
- अनुष्टुप् छन्दः

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# तदेनामेनसो मुक्तां प्रतिगृह्णातु गौतमः।
# इति तस्याश्रमं भेजे साकं रामेण कौशिकः॥९३॥

- तत्, एनाम्, एनसः, मुक्ताम्, प्रति-गृह्णातु, गौतमः, इति, तस्य, आश्रमम्, भेजे, साकम्, रामेण, कौशिकः
- तत् = तस्मात्
- प्रतिगृह्णातु = स्वीकरोतु
- कः प्रतिगृह्णातु? गौतमः

Vyoma
॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

तदेनामेनसो मुक्तां प्रतिगृह्णातु गौतमः।
इति तस्याश्रमं भेजे साकं रामेण कौशिकः॥९३॥

- कां प्रतिगृह्णातु? एनाम् = अहल्याम्
- कथम्भूताम् एनाम्? मुक्ताम् = विमोचिताम्
- कस्मात् मुक्ताम्? एनसः = पापात्
- इति = एवम् उक्त्वा
- भेजे = प्राविशत्

# तदेनामेनसो मुक्तां प्रतिगृह्णातु गौतमः।
# इति तस्याश्रमं भेजे साकं रामेण कौशिकः॥९३॥

- कः भेजे? कौशिकः = विश्वामित्रः
- कं भेजे? आश्रमम् = उटजम्
- कस्य आश्रमम्? तस्य = गौतमस्य
- केन साकं भेजे? रामेण

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# तदेनामेनसो मुक्तां प्रतिगृह्णातु गौतमः।
# इति तस्याश्रमं भेजे साकं रामेण कौशिकः॥९३॥

- अन्वयः – "तत् एनसः मुक्ताम् एनां गौतमः प्रतिगृह्णातु" इति कौशिकः रामेण साकं तस्य आश्रमं भेजे ।
- तात्पर्य्यम् – "तस्मात् भवतः प्रभावेण एषा अहल्या पापात् विमुक्ता भवतु, गौतममहर्षिः च स्वपत्नीं पुनः स्वीकरोतु" इत्यभिधाय विश्वामित्रः रामेण सह गौतमस्य आश्रमं प्रविष्टवान् ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# तदेनामेनसो मुक्तां प्रतिगृह्णातु गौतमः।
# इति तस्याश्रमं भेजे साकं रामेण कौशिकः॥९३॥

- एनसः – सकारान्तः, नपुं, ५.१ । “कलुषं वृजिन-एनस-अघम् अंहस्-दुरित-दुष्कृतम्” (अमरः)
- प्रतिगृह्णातु – प्रति + “ग्रह उपादाने” – लोट्, प्रथम.१
- भेजे – “भज सेवायाम्” – आत्मनेपदे लट्, प्रथम.१
- रामेण साकम् – “सहयुक्तेऽप्रधाने” (२.३.१९) इति तृतीयाविभक्तिः
- अनुष्टुप् वृत्तम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

दुःखे सुखे च रज एव बभूव हेतुः
तादृग्विधे महति गौतमधर्मपत्न्याः ।
यस्माद्गुणेन रजसा विकृतिं गता सा
रामस्य पादरजसा प्रकृतिं प्रपेदे ॥९४॥

- दुःखे, सुखे, च, रजः, एव, बभूव, हेतुः, तादृक्-विधे, महति, गौतम-धर्म-पत्न्याः, यस्मात्, गुणेन, रजसा, विकृतिम्, गता, सा, रामस्य, पाद-रजसा, प्रकृतिम्, प्रपेदे

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

## दुःखे सुखे च रज एव बभूव हेतुस्तादृग्विधे महति गौतमधर्मपत्न्याः।
## यस्माद्गुणेन रजसा विकृतिं गता सा रामस्य पादरजसा प्रकृतिं प्रपेदे॥९४॥

- बभूव = अभूत्
- किं बभूव? हेतुः = कारणम्
- कुत्र हेतुः बभूव? दुःखे = क्लेशे, सुखे च = आनन्दे च
- कीदृशे दुःखे सुखे च? तादृग्विधे महति = अनिर्वाच्ये, अनल्पे
- कस्याः दुःखे सुखे च? गौतमधर्मपत्न्याः = अहल्यायाः
- किं हेतुः बभूव? रजः एव

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

दुःखे सुखे च रज एव बभूव हेतुस्तादृग्विधे महति गौतमधर्मपत्न्याः।
यस्माद्गुणेन रजसा विकृतिं गता सा रामस्य पादरजसा प्रकृतिं प्रपेदे॥९४॥

- यस्मात् = यतः
- गता = प्राप्ता
- का गता? सा = अहल्या
- कां गता? विकृतिम् = अदृश्यावस्थाम्
- केन कारणेन विकृतिं गता? गुणेन रजसा = रजोगुणेन

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

दुःखे सुखे च रज एव बभूव हेतुस्तादृग्विधे महति गौतमधर्मपत्न्याः।
यस्माद्गुणेन रजसा विकृतिं गता सा रामस्य पादरजसा प्रकृतिं प्रपेदे॥९४॥

- प्रपेदे = प्राप्तवती
- का प्रपेदे? सा = अहल्या
- कां प्रपेदे ? प्रकृतिम् = स्वरूपम्, निजाकृतिम्
- केन प्रपेदे? पादरजसा = चरणयोः रेणुना
- कस्य पादरजसा? रामस्य

दुःखे सुखे च रज एव बभूव हेतुस्तादृग्विधे महति गौतमधर्मपत्न्याः।
यस्माद्गुणेन रजसा विकृतिं गता सा रामस्य पादरजसा प्रकृतिं प्रपेदे॥९४॥

- अन्वयः – गौतमधर्मपत्न्याः तादृग्विधे महति दुःखे सुखे च रजः एव हेतुः बभूव, यस्मात् रजसा गुणेन विकृतिं गता सा रामस्य पादरजसा प्रकृतिं प्रपेदे ।
- तात्पर्य्यम् – अहल्यायाः अदृश्यत्वजनिते तीव्रक्लेशे, पुनश्च स्वरूपप्राप्तिरूपे महदानन्दे च रजः एव कारणम् आसीत्, यतः – रजोगुणेन शापभाग् भूत्वा विकृतिं प्राप्ता सा रामस्य पादरेणुना पुनः निजाकृतिं प्राप्तवती ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# दुःखे सुखे च रज एव बभूव हेतुस्तादृग्विधे महति गौतमधर्मपत्न्याः। यस्माद्गुणेन रजसा विकृतिं गता सा रामस्य पादरजसा प्रकृतिं प्रपेदे॥९४॥

- रजः – सकारान्तः, नपुं, १.१ । "गुणाः सत्त्वं रजस्तमः", "रेणुर्द्वयोः स्त्रियां धूलिः पांसुर्ना न द्वयो रजः" (अमरः)
- हेतुः – उकारान्तः, पुं, १.१ । "हेतुर्ना कारणं बीजम्" (अमरः)
- प्रपेदे – प्र + "पद गतौ" – आत्मनेपदे लिट्, प्रथम.१
- वसन्ततिलका वृत्तम्

# सङ्क्षेपः

- अहल्यावृत्तान्तः
  - अत्रागमद्गौतमधर्मदारान्
  - वनमेतद्गते रामे
  - इत्थं विदितवृत्तान्ते
  - तदेनामेनसो मुक्ताम्
  - दुःखे सुखे च






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in









- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in